NO. XXXIII.

# THE VÂRARUCHASANGRAHA

OF

# VARARUCHI

With the commentary DÍPAPRABHÁ

OF

## NÂRÁYAṆA

EDITED

BY

T. GAṆAPATI SÂSTRÍ,

*Curator of the Department for the publication of Sanskrit Manuscripts,*

TRIVANDRUM.

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

---

TRIVANDRUM:

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS

1913.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३३.

# वाररुचसंग्रहः

श्रीवररुचिप्रणीतः

श्रीनारायणकृतया दीपप्रभाख्यया व्याख्ययोपेतः

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितः ।

स च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितः ।

कोळम्बाब्दाः १०८९, क्रैस्ताब्दाः १९१३.

# PREFACE.

The edition of the Vâraruchasangraha with the commentary of Dîpaprabhâ is based on a correct palm leaf manuscript, written in Malayalam character, which is about two centuries old and obtained from Mr. Krishna Tantri of Thazhaman Maṭham, Chengannur. The Sangraha consisting of 25 Slokas treats briefly of *Kâraka*, *Samâsa*, *Taddhita*, *Ting* and *Krit*, which the commentary explains beautifully, in concise and vigorous language.

The commentator by suggesting ("न कात्स्न्यैन भासन्ते तादृशां गिरः" p. 54) his inability to grasp fully the meaning of the author of the Sangraha raises him to a position of a very great eminence. Again the commentator, in another place, observes "सूत्रकारकल्पः संग्रहकारस्तद्वच्छान्दसं प्रयोगं कृतवान् ......"(p. 35) thus giving to the author a position equal to that of the Sûtrakâra (पाणिनि) himself, in respect of freedom of language, and would appear to identify him with Vararuchi, otherwise known as Kâtyâyana, the author of the Vârtikas or supplementary notes on the Sûtras of Pânini.

Probably, the present Vararuchi might be one of the "Nine Gems" that adorned the Court of Vikramâditya. There is a work named Âsauchâshṭaka, (आशौचाष्टक) ascribed to Vararuchi which comprises all the injunctions relating to Âsaucha (pollution). This Âsauchâshṭaka is likely to be the work of the present Vararuchi who writes short treatises on great subjects.

Three more works are also found ascribed to Vararuchi :— (1) Vârarucha (Jyotisha), (2) Vârarucha (Lexicon), and (3) Prâkritaprakâsa by Vararuchi. As all these works treat of Sastraic (Scientific) subjects, we are led to think that they are written by one and the same Vararuchi, desirous of displaying his mastery of various branches of knowledge.

The commentary, Dîpaprabhâ quotes Bhartrihari, Kaiya Jinendra and Haradatta, but no author posterior to the From this and also from the style and manner of the comme tary, we may take it to have been written by an ancient gran marian of a higher order. In fact, it rivals, in force and di nity of language, the Purushakâra, the commentary on Daiv The closing verse of Dîpaprabhâ,

"वेदो नाम महत्पदं जनपदो यत्र द्विजानां ततिः
साङ्गं वेदमधीत्य वाच्यमखिलं मीमांसतेऽस्य स्फुटम् ।
तत्र ग्रामवरे कचिन्निवसता नाम्ना च नारायणे-
नैषा वाररुचार्थदीपनपरा दीपप्रभा निर्मिता ॥"

discloses that the author Nârâyana lived in a village within the country called Veda. It is not known definitely where this country is situated. The tract of country between Kottayam and Alwaye, in North Travancore is traditionally known among the Nambudiri Brahmins, as "Veda Nâdu". If this tradition can be relied on, the Veda Janapada of the commentator may be identified with the above tract, as Nâdu means a country.

The colophon at the end of the Kavikalpadruma of Bopadeva has the following verse :—

"विद्वद्धनेशशिष्येण भिषक्केशवसूनुना ।
तेने वेदपदस्थेन बोपदेवद्विजेन यः ॥" (कविकल्पद्रुमः)

Here the meaning of the word पद, to be in harmony with the natural significance of the root स्था, in वेदपदस्थेन should mean a spot (स्थान) which can be either a village or a town or a country. But the author Bopadeva cannot have meant the first two, for he would have then, to avoid ambiguity mentioned वेदग्रामजुषा and वेदपुरस्थेन respectively, wherefore the word पद should be taken here to mean a जनपद *i. e.*, a country, as we know from the present commentary that there is a country called Veda. It follows from this that Bopadeva was also a native of the country, called Veda. If the native countries of Nârâyana and

Bopadeva be identical, that of Nârâyana, the commentator should then be in Central India, for Bopadeva, the protegee of Hemadri is known to be a native of Berar. If their native countries be different, the Veda of Nârâyana may be the same as the Veda Nâdu in North Travancore. If so, the commentator may be the same as Nârâyana, the author of Tantrasamuchchaya,* who is known to be an ancient author born in Jayantamangala (Chennassumanakkal) existing in Veda Nâdu. It is evident from the colophon, "कल्यब्देष्वतियत्सु नन्दनयनेष्वम्भोधिसङ्ख्येषु" at the end of the Tantrasamuchchaya, that it was written in 4529 of the Kali year, and that its author lived in the first half of the 15th century A. D.

TRIVANDRUM. T. GANAPATI SÂSTRÎ.

* This work treats of religious formularies for the wroship of the Deities

# निवेदना ।

**वाररुचसङ्ग्रहो** नामायं **दीपप्रभा**ख्यया व्याख्ययोपेतः (चेङ्ङन्नूर्) **कृष्णतन्त्रि**महाशयसकाशादुपलब्धं केरलीयग्रन्थलिपिमुपद्विशतवर्षवृद्धं शुद्धमादर्शमाश्रित्य संशोधितः । कारकाणि, समासाः, तद्धिताः, तिङः, कृतश्चेत्येतावदत्र वस्तुजातं पञ्चविंशत्या कारिकाभिः संगृहीतम् । तच्चोदारगम्भीराभिरनतिपरिमिताभिर्भणितिभि**र्दीपप्रभ**योपपादितम् ।

संग्रहकारो **वररुचि**स्तत्रभवता **दीपप्रभा**कारेण "न कार्त्स्न्येन भासन्ते तादृशां गिरः" (पृ. ५४) इत्यात्मनस्तदुक्तिगतकृत्स्नार्थप्रतिपत्त्यपाटवं शंसता गौरवस्य परां काष्ठां नीतः । क्वचिच्च "सूत्रकारकल्पः संग्रहकारस्तद्वच्छान्दसं प्रयोगं कृतवान्" (पृ.३९) इति संग्रहकारस्य सूत्रकारतुल्यं शब्दप्रयोगे स्वातन्त्र्यं वदन्नसौ तं **वररुचिं कात्यायना**परनामानं वार्तिककार**वररुचि**मेव मन्यत इव ।

विक्रमार्कसभानवरत्नान्तर्गतो वा **वररुचि**रस्य संग्रहस्य कर्ता कामं स्यात् । अस्त्या**शौचाष्टक**मिति कश्चिद् ग्रन्थो **वररुचि**प्रणीत उपलब्धः, यत्राशौचविषयः सर्वे निपुणं संगृहीताः । **इदमाशौचाष्टक**मपि विपुलविप्रकीर्णार्थसंग्रहणस्वभावस्य प्रकृतस्यैव **वररुचेः** कृतिः सम्भाव्यते ।

त्रयोऽन्ये **वररुचि**सम्बन्धवन्तो ग्रन्था वर्तन्ते —

१. वाररुचम् (ज्योतिश्शास्त्रम्)
२. वाररुचम् (अभिधानम्)
३. वाररुचः (प्राकृतप्रकाशः)

इति । सर्वेषामेषां शास्त्रविषयताया नियमेन दर्शनादिदमूहितु शक्यं, यद् नानाशास्त्रविशारद एक एव **वररुचि**रुच्चावचशास्त्रग्रन्थप्रणयनकौतुकादेनान् ग्रन्थान् विरचितवानिति ।

**दीपप्रभायां भर्तृहरिः कैयटो जिनेन्द्रो हरदत्तश्च** स्मर्यन्ते, न तु तदर्वाचीनः कश्चित् । तेन तद्वाक्यशैलीगुणविशेषेण च तस्याः कर्ता **प्राचीनः** कश्चिन्माननीयो महावैयाकरण इति प्रत्येतुं शक्यते । सा हि प्रौढ्या **दैव**व्याख्यानेन **पुरुषकारेण** तुलयितुं शक्यते । **दीपप्रभा**कारो नाम्ना **नारायण** इति, **वेदाभिधान**जनपदान्तर्गतः कश्चिद् ग्रामस्तस्य निवासस्थानमिति च —

"वेदो नाम महत्पदं जनपदो यत्र द्विजानां ततिः
साङ्गं वेदमधीत्य वाच्यमखिलं मीमांसतेऽस्य स्फुटम् ।
तत्र ग्रामवरे क्वचिन्निवसता नाम्ना च **नारायणे-**
नैषा **वाररुचार्थ**दीपनपरा **दीपप्रभा** निर्मिता ॥"

इत्यस्माद् ग्रन्थान्तिमपद्यादवगम्यते । स चासौ जनपदः क्व सन्निविष्ट इति न निश्चयः । **उत्तरवञ्चिमण्डले कोट्टयपुरादुत्तरत आलुवानगराद्** दक्षिणतश्च सन्निविष्टस्य भूभागस्य 'वेदनाडु' इति व्यपदेशोऽस्तीति केरलीयब्राह्मणाः कथयन्ति । तस्य प्रामाण्ये स **वेद**जनपदो मन्तुं शक्यः । नाडुशब्दस्य केरलभाषायां जनपदवाचित्वात् ।

"विद्वद्धनेशशिष्येण भिषक्केशवसूनुना ।
तेने वेदपदस्थेन **बोपदेव**द्विजेन यः ॥"

इति **कविकल्पद्रुम**स्यान्ते श्लोकः पठ्यते । अत्र 'वेदपदस्थेन' इत्यत्र स्थाधात्वर्थान्वयानुगुण्यात् पदशब्दः स्थानवाची युक्तः । स्थानं च ग्रामरूपं पुररूपं जनपदरूपं वा वक्तव्यम् । तत्र ग्रामे विवक्षिते 'वेदग्रामजुषा' इत्यसन्देहायावक्ष्यद् **बोपदेवः** । पुरविवक्षायां 'वेदपुरस्थेन' इत्यवक्ष्यत् । अतो **वेदा**ख्यजनपदस्य प्रकृतग्रन्थाधीतत्वाच्च जनपदरूपमेव स्थानं पदशब्देन ग्रहीतुमुचितम् । एवञ्च नारायणवद् **बोपदेवो**ऽपि **वेदा**ख्यजनपदवासीति फलति । यदि **नारायणबोपदेव**योर्**वेद**जनपदावभिन्नौ, तर्हि **हेमाद्रि**शिष्यस्य **बोपदेव**स्योत्तरदेशीयत्वादुत्तरदेशेष्वेवं **वेदा**ख्यो जनपदो **नारायणो**क्तो मृग्यः । यदि तु तौ भिन्नौ, तर्हि **वञ्चिमण्डला**न्तर्गत एव **नारायण**स्य जनपदः प्रत्येतव्यः । एवं तु प्रकृतो **नारायणस्तन्त्रसमुच्चया**ख्यग्रन्थकारा**न्नारायणा**दभिन्न इत्यपि कामं सम्भाव्यतां, यतः स **वेद**जनपदान्तर्गत**जयन्तमङ्गला**(चेन्नस्मनक्कल्)भिजनः प्राचीनश्च । स हि **तन्त्रसमुच्चय**स्यान्ते 'कल्यब्देष्वतियत्सु नन्दनयनेष्वम्भोधि(१५२९)सङ्ख्येषु' इति तन्निर्माणकालं वदन् १४२६तमे क्रैस्ताब्दे स्वस्य सत्तामावेदयति ।

अनन्तशयनम् ।

**त. गणपतिशास्त्री.**

॥ श्रीः ॥

# वाररुचसंग्रहः ।

## दीपप्रभाख्यव्याख्योपेतः ।

---

यस्य प्रसादजलबिन्दुनिपातलब्ध-
शाखोपशाखकुसुमाः फलिताश्च भान्ति ।
प्रारम्भरूपतरवोऽखिलदेहभाजां
स्तान्मे स वाररुचसङ्ग्रहविग्रहाय ॥

तत्र तावच्चिकीर्षितग्रन्थस्य 'मङ्गलाचारे'त्यादिस्मृतिसिद्धाविघ्नपरिसमाप्त्यादिप्रयोजनसिद्ध्यर्थं शिष्टाचारानुसरणार्थं च प्रबन्धारम्भेऽवश्यकर्तव्यं मङ्गलाचरणं ग्रन्थगौरवभयात् तस्मिन्ननिवेशितं विधाय सुप्तिङ्कृतां कारके विधानात् समासतद्धितयोः कारकहेतुकसुबन्तनिमित्तत्वाच्च सकलनिदानभूतकारकावधारणस्य प्रथमप्राप्ततां दर्शयति —

**प्रयोगमिच्छता ज्ञातुं ज्ञेयं कारकमादितः ।**

इति। प्रयुज्यत इति प्रयोगः। 'अकर्तरि च कारके संज्ञायाम्' (३. ३. १९) इत्यत्र संज्ञाग्रहणस्य प्रत्याख्यातत्वात् कर्मणि घञ् । लोकेनादिप्रयुक्ताः साक्षाद्वाचका ये शब्दाः साधवो गवादयः, तेषां स्वरूपं गवाद्युच्चारणेच्छुभिः बालादिभिरशक्त्यादिनान्यथोच्चारितेभ्यः साधुशब्दस्मारणद्वारेणार्थप्रत्यायनसमर्थेभ्यो गाव्याद्यादिमदपशब्देभ्यो विवेकेन परिज्ञातुमिच्छता तदुपायजिज्ञासुना प्रथमं कारकस्वरूपमवधार्यमित्यर्थः। तत्र प्रयोगं ज्ञातुमिच्छतेत्यनेन 'व्याकरणस्य यत् प्रयोजनं साधुशब्दपरिज्ञानं नाम, तदेवास्य प्रकरण-

स्यापि । विषयश्च स एव, ये साधुशब्दाः । अधिकारी च स एव, यः शब्दसाधुत्वं जिज्ञासुः' इत्यप्युक्तं भवति ॥

कर्मादिभेदप्रदर्शनपूर्वकं तत्स्वरूपमाह —

संज्ञया षड्विधम्

इत्यादिना । तत् कारकं संज्ञया कर्तृकर्मकरणसंप्रदानापादानाधिकरणरूपया षट्प्रकारयुक्तं भवतीत्यर्थः । ननु हेतोरपि स्वव्यापारे प्रेषणादौ कर्तृत्वात् 'कारके' (१.४.२३) इति तत्राधिकाराच्च कारकत्वात् सप्तविधं वाच्यम् । नैतदस्ति । 'तत्प्रयोजको हेतुश्च' (१.४.५५) इत्यत्र चकारेणैकसंज्ञाधिकारहेतुकबाधप्रसङ्गपरिहाराय कर्तुः समुच्चितत्वात् कर्तैव सन् हेतुसंज्ञो भवतीत्यर्थाश्रयणात् कर्तर्यन्तर्भूतत्वात् । तथा चोक्तं— 'कर्तैव विहितां शास्त्रे हेतुसंज्ञां प्रपद्यत' इति ॥

अवान्तरभेदमाह —

भेदास्त्रयोविंशतिधा पुनः ॥ १ ॥

इति । तेषां कर्मादीनां भेदास्त्रयोविंशतिप्रकारा द्रष्टव्याः ॥ १ ॥

एवमुक्ते कथमित्याकाङ्क्षायां तत्पूर्त्यर्थं कर्त्रधीनत्वात् करणादीनां प्रवृत्तिनिवृत्त्योस्तस्य प्राधान्यात् प्रथमं तद्भेदं दर्शयन्नाह—

तत्र पञ्चविधः कर्ता

इति । तत्र तेषु कर्मादिकारकेषु मध्ये पञ्चप्रकारः कर्ता

भवति । कथम् । स्वतन्त्रकर्ता त्रिविधः अभिहितानभिहित-कर्मकर्तृभेदेन । तत्राभिहितानभिहितभेदः सुब्विषय एव क्वचित् प्रदर्शितोऽन्यत्राप्यूहनीय इति सार्वत्रिकोऽप्ययमत्रैवोक्तः । हेतुकर्ता द्विविधः चेतनविषयोऽचेतनविषयश्चेति । अभिहिते 'देवदत्तः पचति, यज्ञदत्तस्तिष्ठती'ति । अत्र तिङा कर्तुरभिहितत्वादनभिहिताधिकारविहिततृतीयाविभक्तेरभावात् प्रथमैव भवति । तथा चोच्यते—'अभिहिते प्रथमाभाव' इति । अनभिहिते 'पच्यते देवदत्तेन, स्थीयते यज्ञदत्तेने'ति । अत्र 'स्वतन्त्रः कर्ता'(१.४.५४) इति कर्तृसंज्ञायां 'कर्तृकरणयोस्तृतीया'(२.३.१८) इति तृतीया । कर्मकर्तरि 'भिद्यते कुसूलः स्वयमेव, पच्यते ओदनः स्वयमेवे'ति । भिनत्ति कुसूलं देवदत्त इत्यस्मिन्नर्थे कुसूलस्य कर्मणः सौकर्यातिशयात् कर्तृत्वविवक्षायामयं प्रयोगः । 'कर्मवत् कर्मणा तुल्यक्रियः'(३.१.८७) इति कर्मवद्भावादात्मनेपदम् । चेतनविषये 'पाचयत्योदनं देवदत्तेने'ति । अत्र प्रयोजकव्यापारेण व्याप्यमानत्वात् प्रयोज्यस्य कर्मसंज्ञा प्राप्ता 'गतिबुद्धि—'(१.४.५२)इत्यादिना नियम्यते । तेन स्वव्यापारे स्वातन्त्र्यमाश्रित्य कर्तृसंज्ञायां तृतीया भवति । तदुक्तं—

"गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः ।
नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते ॥"

इति । अचेतनविषये 'भिक्षा वासयति, कारीषोऽग्निरध्यापयती'ति । अचेतनानां प्रेषणाध्येषणव्यापारासंभवात् कथं हेतुसंज्ञाप्राप्तिरिति चेत् । न । तत्समर्थाचरणसद्भावात् । तथाचोक्तं भगवता

भाष्यकारेण—'नावश्यं स एव वासं प्रयुङ्क्ते य आह उष्यतामिति[2]। तूष्णीमप्यासीनो यस्तत्समर्थान्याचरति सोऽपि वासं प्रयोजयति । भिक्षाश्चापि प्रचुरा व्यञ्जनवत्यो लभ्यमाना वासं प्रयोजयन्ति । तथा कारीषोऽग्निर्निर्वात एकान्ते सुप्रज्वलितोऽध्ययनं प्रयोजयती'ति । एवं वा कर्तुः पञ्चविधत्वम् । स्वतन्त्रकर्ता द्विविधः चेतनकर्ता अचेतनकर्तेति । हेतुकर्ता प्रेषणाध्येषणतत्समर्थाचरणलक्षणव्यापारभेदात् त्रिविधः । चेतने 'देवदत्तः पचती'त्यादि । अचेतने 'नदी वहति, कूलं पतति, एधाः पचन्ति, स्थाली पचती'ति । प्रवर्तयितृत्वादीनां धर्माणां शब्दविषयतया समाश्रयणादत्र कर्तृत्वं मुख्यमेव । तथाचोक्तं —

"धर्मैरभ्युदितैः शब्दे नियमो न तु वस्तुनि ।
कर्तुर्धर्मविवक्षायां शब्दात् कर्ता प्रतीयते ॥"

इति । व्याकरणान्तरे त्वर्थी कर्ता । 'तथायुक्तं च—'(१.४.५०)इति लक्षणं चेतनाचेतनविषयं प्रणीतम् । प्रेषणे 'देवदत्तः कटं कारयति, यज्ञदत्त ओदनं पाचयती'ति । अध्येषणे 'छन्दोऽध्यापयति माणवकं, व्याकरणमध्यापयती'ति । निकृष्टविषयो नियोगः प्रेषणम्, अभ्यर्हितविषयोऽध्येषणमित्यनयोर्भेदः । (तत्समर्थाचरणे) 'भिक्षा वासयति, कारीषोऽग्निरध्यापयती'ति । उक्तं च—'प्रेषणाध्येषणे कुर्वंस्तत्समर्थानि चाचरन्'ति ॥

---

१. 'योजयति य', २. 'ति ब्रवीति किं तर्हि तू' इति मुद्रितपुस्तकपाठः.

एवं कर्तृभेदमुक्त्वा विभक्त्यनुक्रमानुसारेण कर्मादिभेदमाह —

**कर्म सप्तविधं भवेत् ।**

इति । कथं सप्तविधत्वम् । उच्यते । 'कर्तुरीप्सिततमं कर्म'(१. ४. ४९) इति त्रिविधं निर्वर्त्यं विकार्यं प्राप्यं चेति । यस्योपादानं मृदादि नास्ति, तन्निर्वर्त्यम् । यथा संयोगं करोतीति । यस्यापि सदपि तन्न विवक्ष्यते, तन्निर्वर्त्यम् । यथा घटं करोतीति । यस्यापि सतोऽप्यभेदो न विवक्ष्यते, किं तर्हि, भेद एव, तदपि निर्वर्त्यमेव । यथा मृदा घटं करोतीति । उक्तं च हरिणा —

"सती वाविद्यमाना वा प्रकृतिः परिणामिनी ।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते ॥"

इति । किमिदं निर्वर्त्यत्वं नाम । असतः स्वरूपलाभ इति चेत् । न । सत्कार्यवादिमते तस्यानित्यत्वात् । सर्वपार्षदं हीदं शास्त्रम् । तस्माज्जन्मना प्रकाश्यमानत्वं निर्वर्त्यत्वम् । एतच्चोक्तं—

"यदसज्जायते सद्वा जन्मना यत् प्रकाश्यते ।
तन्निर्वर्त्यम्"

इति । प्रकृतिविकारभेदविवक्षायां तु विकार्यं कर्म । अत्रावान्तरभेदो द्रष्टव्यः मूलोच्छिन्नप्रकृतिकमुत्पन्नगुणान्तरप्रकृतिकं चेति । आद्यस्य काष्ठानि भस्म करोतीत्याद्युदाहरणं, द्वितीयस्य सुवर्णं कुण्डलं करोतीति । विकार्यं तु कर्म द्वेधा व्यवस्थितम् । उक्तं च —

"प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत् ।
किञ्चिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवद् ॥"

इति । यत्र क्रियाकृतो विशेषः प्रत्यक्षानुमानागमैर्न ज्ञायते, केवलं क्रियया प्राप्यते, तत् प्राप्यम् । यथा आदित्यं पश्यति, नगरमुपसर्पति, ग्रामं गच्छतीति । निर्वर्त्ये तु कर्मण्यात्मलाभ एव विशेषः प्रत्यक्षादवधार्यते । विकार्येऽपि भस्मकुण्डलादौ प्रत्यक्षेण । क्वचिदनुमानात् । यथा वृक्षमवसिञ्चतीत्यत्र । तदानीं सूक्ष्मत्वाद् दुरवधारत्वेऽपि पश्चात् प्रचिततरविशेषदर्शनादनुमीयते नूनमवसेचनक्रियाकृतो विशेष एष इति । क्वचिदागमात् । 'व्रीहीन् प्रोक्षती'त्यत्र प्रोक्षणेन व्रीहिषु कश्चिदतिशयो गम्यत इत्यागमादवगम्यते । कर्ममीमांसकास्त्वेभ्योऽतिरिक्तं संस्कार्यमेतत् कर्मेत्यङ्गीकुर्वन्ति । उक्तं च —

"क्रियाकृता विशेषाणां सिद्धिर्यत्र न गम्यते ।
दर्शनादनुमानाद्वा तत् प्राप्यं कर्म कथ्यते ॥"

इति । अत्र केचिच्चोदयन्ति । ननु नास्त्येव प्राप्यं कर्म, सर्वत्र क्रियाकृतविशेषावधारणात् । तथाहि—दृष्टिविषेण विषधरेण निरीक्षितो विषयो ज्वलनज्वालावलीढो लक्ष्यत इति तावत् संप्रतिपन्नम् । तत्साधर्म्यादन्यत्रापि क्रियाहितो विशेषः समुन्नेयः । तैजसं हि चक्षुः प्राप्यकारीति तेन युक्तो विषयोऽवश्यं विक्रियते । यथा चायस्कान्तसन्निधौ लोहस्य भ्रमणं, कतकसन्निधौ च जलस्य प्रसादः । एवं सर्वत्र । अत्रोच्यते । क्वचिद् विशेषदर्शनेऽपि सर्वत्र तथाभावे प्रमाणाभावः । किञ्च क्रियाफलेऽत्र विका-

रोऽभिमतः । आदित्यादीनां तु दर्शनादिक्रियाहेतुत्वं, न फलता, कर्तृत्वात् फलस्य (?) यत्र पुनरत्रभवतो विकारबुद्धिः, तत्रापि न क्रियावशाद् विकारः । (अपितु) तेजःसंपर्कादेव । अयंस्कान्तादावपि वस्तुस्वभावादेव, न क्रियातः । न चेद् विकारयोगः, कथं तर्हि क्रियासिद्धावङ्गतेति चेद्, योग्यदेशापत्त्यादयो विशेषाः साधनतां संपादयन्ति प्राप्यकर्मण इत्यदोषः । यथोक्तम् —

"आभासोपगमो व्यक्तिः सोढत्वमिति कर्मणः ।
विशेषाः प्राप्यमाणस्य क्रियासिद्धौ व्यवस्थिताः ॥"

इति । सूत्रान्तरनिर्दिष्टं चतुर्विधं तटस्थमनीप्सितमकथितमन्यपूर्वकं चेति । तटस्थे 'ग्रामं गच्छन् वृक्षमूलान्युपसर्पती'त्यादि । अनीप्सिते 'विषं भुङ्क्ते, व्याघ्रान् पश्यती'ति । उभयत्रापि 'तथायुक्तं चानीप्सितम्' (१. ४. ५०) इति कर्मसंज्ञा । ईप्सितादन्यदित्यर्थाश्रयणात् । अकथिते 'गां दोग्धि पयः, धनिनं याचते धनमि'ति । अत्र संज्ञान्तरैरपादानादिभिरकथिते गवादिके 'अकथितम्—'(१. ४. ५१) इति कर्मसंज्ञा । अन्यपूर्वके 'देवदत्तमभिक्रुध्यति, देवदत्तमभिद्रुह्यती'ति । अत्र 'क्रुधद्रुह—'(१.४.३७) इत्यादिना संप्रदानसंज्ञायां प्राप्तायां 'क्रुधद्रुहोरुपसृष्टयोः कर्म' (१. ४. ३८) इति कर्मसंज्ञैव भवति, विशेषविहितत्वात् । तथा अक्षान् दीव्यतीत्यत्र पूर्वसूत्रेण करणसंज्ञमेव कर्मसंज्ञं भवति 'दिवः कर्म च'(१.४.४३) इत्यनेन । एतच्चोक्तं हरिणा —

"निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम् ।
तत्रेप्सिततमं कर्म चतुर्धान्यत् तु कल्पितम् ॥

औदासीन्येन यत् प्राप्यं यच्च कर्तुरनीप्सितम् ।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम् ॥"

इति ॥

करणभेदमाह —

**करणं द्विविधं चैव**

इति । अत्र केचिद् बाह्याभ्यन्तरभेदेन द्विविधत्वमाचक्षते । यत् शरीरावयवादन्यत्, तद् बाह्यं, दात्रेण लुनाति परशुना छिनत्तीति । आभ्यन्तरं मनःप्रभृति, मनसा पाटलिपुत्रं गच्छति, शिरसा देवं नमस्कुरुत इति । वयं तु स्वकरणान्यकरणभेदेनैतदुक्तमिति मन्यामहे । तत्र कर्तुरन्यद् दात्राद्यन्यकरणमित्युच्यते। यदा पुनः करणान्तराभावप्रतिपादनाय कर्तुरेव विवक्षाप्रापितरूपभेदायत्तः करणभावः, तदा तत् स्वकरणमित्युच्यते, तैक्ष्ण्यमात्मना छिनत्तीत्यादि ॥

**संप्रदानं त्रिधा मतम् ॥ २ ॥**

इति। अत्र स्वव्यापारभेदाद् भेदो द्रष्टव्यः। अनिराकरणं प्रेरणमनुमतिश्च स्वव्यापरः। अनिराकरणे 'उपाध्यायाय गां ददाती'त्यादि । स ह्युपाध्यायस्तद् गवाद्यभिसंबध्यमानं न निराकरोति। यदि क्रुद्धो निराकुर्याद्, दानमेव न संपद्येत । परस्वत्वापादनपर्यन्तं हि तत् । प्रेरणे 'माणवकाय भिक्षां ददाति धार्मिक' इत्यादि । स हि माणवको धार्मिकं संप्राप्य तं प्रेरयति भिक्षां ददातु भवानिति । अनुमत्यां 'राज्ञे श्लोकं ददाति कविरि'त्यादि । स हि राजा श्लोकार्थपर्यालोचनेन कविं श्लाघ-

मानस्तद्दानमनुमन्यते । अत्रानिराकरणस्या(न?)ङ्गत्वं संभावनया, अनुमतेस्तु सर्वत्र भावात् । गोबलीवर्दन्यायेनात्र भेदः ॥ २ ॥

अपादानं द्विधा चैव

इति । चलाचलभेदेन द्वैविध्यम् । चले 'धावतोऽश्वात् पतितः, सार्थाद् गच्छतो हीन' इत्यादि । अचले 'ग्रामादागच्छति, पर्वतादवरोहती'त्यादि । ननु ध्रुवस्य स्थिरात्मकस्य चलत्वानुपपत्तेः सपरिस्पन्दानामश्वादीनामियं संज्ञा न प्राप्नोति । नैवम् । अत्र ध्रुवशब्द एकरूपवाची, न तु कूटस्थादिपर्यायः। ऐकरूप्यं चापायविषयमाश्रीयते । तदयमर्थः — अपाये साध्ये यद् ध्रुवं यदेकरूपं, तेनापायेनानाविष्टमिति यावत् । ततश्च धावतोऽश्वात् पतित इत्यत्र पतनक्रियावेशाद् देवदत्तस्यैवापाययुक्तत्वादध्रुवत्वम्। अश्वस्य तु तदभावाद् ध्रुवत्वमेव। उक्तं च हरिणा —

"द्रव्यस्वभावो न ध्रौव्यमिति सूत्रे प्रतीयते ।
अपायविषयध्रौव्यं यत् तु तावद्विवक्षितम् ॥

सरणे देवदत्तस्य ध्रौव्यं पाते तु वाजिनः ।
आविष्टं यदपायेन तस्याध्रौव्यं प्रचक्षते ॥"

इति। केचित् तु पठन्ति 'संप्रदानं द्विधा मतम् । अपादानं त्रिधा चैव' इति । तस्मिन् पाठे शास्त्रीयलौकिकभेदेन संप्रदानस्य द्वैविध्यं, निर्दिष्टविषयमुपात्तविषयमपेक्षितविषयं चेत्यपादानस्य

त्रैविध्यं च द्रष्टव्यम् । तत्र 'रुच्यर्थानां प्रीयमाणः'(१. ४. ३३) इत्यादिभिः सूत्रैर्विधीयमाना शास्त्रीयेत्युच्यते। 'कर्मणा–'(१.४. ३२) इति सूत्रेण विधीयमाना लौकिकी । यद्यपि सर्वा संप्रदानसंज्ञा शास्त्रेणैवोच्यते। तथापि हरिप्रभृतिभिः संप्रदीयते यस्मै स संप्रदानसंज्ञ इत्यन्वर्थसंज्ञाङ्गीकरणाल्लौकिक एव संप्रदानार्थः 'कर्मणा———' इति सूत्रेणोक्तः । 'रुच्यर्था'दिभिस्तु यस्यांकस्याञ्चित् संज्ञायां शेषषष्ठ्यां वा प्राप्तायां विधानाल्लौकिकार्थाभावाच्छास्त्रेणैव संप्रदानसंज्ञा कथ्यत इत्येवं शास्त्रीयलौकिकभेदः । तत्र 'रुच्यर्था'दिसूत्रेण कर्मसंज्ञायां प्राप्तायां विधीयते देवदत्ताय रोचते मोदक इति। अत्र हि रुचिधातुः प्रीणयत्यर्थे वर्तते, अनेकार्थत्वाद् धातूनाम् । देवदत्तं मोदकः प्रीणयतीत्यर्थः । तथा च प्रीयमाण इति विशेषणमुपपन्नं भवतीति देवदत्तो रुचेः कर्म । अपरे हेतुसंज्ञायां प्राप्तायामित्याहुः। शेषषष्ठ्यां प्राप्तायामित्यन्ये। एवं 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' (१. ४. ३४) इति। अत्र ह्याख्यानकर्म संप्रदानं, ज्ञीप्स्यमानशब्दवाच्यत्वात् तस्येति दर्शने कर्मसंज्ञायां प्राप्तायां विधानम् । देवदत्ताय श्लाघत इत्यस्य ह्ययमर्थः — देवदत्तं प्रति श्लाघमानस्तामेव श्लाघां तमेव ज्ञापयितुमिच्छतीति । अपरे यस्मा आख्यायते स संप्रदानमिति वदन्तः शेषषष्ठ्यां प्राप्तायामित्याहुः । एष मतभेदः कैयटमिश्रैर्वर्णितः — 'ज्ञीप्स्यमाने विवदन्ते यस्मा आख्यायते स संप्रदानं, य आख्यायते स इत्यन्य' इति । 'धारेरुत्तमर्णः' (१. ४. ३५) इति तु शेषषष्ठ्यां प्राप्तायाम् । देवदत्ताय शतं धारयतीत्यत्र हि शतधारणस्य देवदत्तो निमित्तं,

तेन दत्तत्वाद् धनस्य। पुष्पेभ्यः स्पृहयतीत्यत्र पुष्पाणामीप्सिततमत्वात् कर्मसंज्ञायां प्राप्तायां 'स्पृहेरीप्सितः'(१. ४. ३६) इति विधानम्। एवं 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' (१. ४. ३७) इति। देवदत्ताय राध्यतीक्षत इत्यत्र देवदत्तस्य गणकप्रयोजकत्वाद्धेतुसंज्ञायां प्राप्तायां 'राधीक्ष्योर्यस्य विप्रश्नः'(१. ४. ३९) इति वचनम्। एवं 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' (१.४. ४०) इति। देवदत्ताय गां प्रतिशृणोतीत्यत्र हि देवदत्तो याच्ञया गां प्रतिजानानं प्रयुङ्क्ते। 'अनुप्रतिगृणश्च' (१. ४. ४१) इति कर्मसंज्ञायां प्राप्तायाम्। 'होत्रेऽनुगृणाती'त्यस्य हि होतारं शंसन्तं प्रोत्साहयतीत्यर्थः। एवं संप्रदानस्य द्वैविध्यं व्याख्यातम्। अपादानस्य त्रैविध्ये हरिः प्रमाणम्। य आह —

"निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा।
अपेक्षितक्रियं चेति त्रिधापादानमुच्यते॥"

इति। कैयटमिश्रा अप्याहुः 'त्रिविधं चेदपादानमि'त्यादि। तत्र यस्य धातुनापायलक्षणो विषयो निर्दिष्टः, तन्निर्दिष्टविषयमपादानम्। यथा — ग्रामादागच्छति, पर्वतादवरोहतीत्यादि। उपात्तः क्रियान्तरस्य गुणभावेन प्रधानभावेन वा यत्रापायलक्षणो विषयः, तदुपात्तविषयम्। यथा — वलाहकाद् विद्योतत इति। अत्रहि निःसरणाङ्गे विद्योतने विद्योतनाङ्गे निःसरणे वा द्युतिर्वर्तते। वलाहकान्निःसृत्य ज्योतिर्विद्योतते, वलाहकाद्वा विद्योतमानं निःसरतीत्यर्थः। तथा कुसूलात् पचतीत्यादानाङ्गे पाके पचिर्वर्तते। एवं ब्राह्मणाच्छंसीति। यत्र क्रियाशब्दस्यानु-

पलब्धेरनुमीयमाना क्रिया, तदपेक्षितक्रियम्। यथा माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इति। उपात्तविषये धातुनैवापायः स्वीकृतः, अत्र तु तदभाव इति भेदः॥

एवं विभक्त्यनुक्रमानुसारेण सम्प्रदानापादानभेदमुक्त्वा प्राप्तावसरं शेषलक्षणं सम्बन्धं कारकान्यत्वादतिक्रम्याधिकरणभेदमाह —

तथाधारश्चतुर्विधः।

इति। यथा कर्मादीनां भेदः, तथाधारस्यापि भेदश्चतुर्विध इत्यर्थः। कथम्। व्यापकमौपश्लेषिकं वैषयिकं सामीपिकं चेति। व्यापके 'तिले तैलं, दध्नि सर्पिरि'ति। अत्र तिलादेस्तैलादिना समवायसम्बन्धात् सकलावयवव्याप्त्या व्यापकमित्युच्यते। औपश्लेषिके 'कटे आस्ते, रथे तिष्ठती'ति। अत्र सङ्गिनः कटादेः सकलावयवव्याप्त्यसम्भवात् कतिपयावयवव्याप्त्या कर्तुरुपश्लेषादौपश्लेषिकमेतत्। आधाराधेयसम्बन्धस्योपश्लेषस्य सर्वाधिकरणसाधारणत्वाद् गोबलीवर्दन्यायेनौपश्लेषिकस्यान्येषां च भेदः। वैषयिके 'खे शकुनयः, जले मत्स्या' इति। अत्राकाशादेस्तात्त्विकावयवाभावात् कल्पितप्रदेशतया सम्बन्धाद्वैषयिकमेतत्। अनन्यत्रभावश्चात्र विषयार्थः। सामीपिके 'गङ्गायां घोषः प्रतिवसती'त्यादि। अत्र प्रवाहरूपायां घोषवासस्याशक्यत्वात् समीपस्याधेयेन सम्बन्धात् सामीपिकमेतत्।

नन्वत्र मुख्ये भवति गौणे कार्यं कथं भवेत्।
मैवमस्मिन् प्रकरणे ह्ययं न्यायो न विद्यते॥

साधकग्रहणात् सिद्धे यत् तमग्रहणं कृतम् ।
स्वरितेनेति सूत्रेणाप्यधिकं कार्यमादृतम् ॥

एवं भेदं प्रदर्श्य सामान्यं कारकमाचष्टे —

**करोति कारकं**

इति। अन्वर्थत्वयुक्तेयं संज्ञेत्यर्थः। अन्यथा 'अकथितमि'-त्यत्राप्रधानवाच्यकथितशब्दाश्रयणे ब्राह्मणस्य पुत्रं पन्थानं पृ-च्छतीत्यत्र ब्राह्मणस्यापि कर्मसंज्ञा प्रसज्येत । अत्र च संज्ञा-या भाव्यमानत्वाद् भूतविभक्त्यनुपपत्त्या भाव्यमानविभक्तेः प्रथमायाः स्थाने सुब्व्यत्ययेन सप्तमी कृता । न च का-रकसंज्ञाया अपादानादिभिः समावेशः स्तम्बेरम इत्यादौ सप्तमीकृदन्तोत्तरपदप्रकृतिस्वरसिद्ध्यर्थो न प्राप्नोति, एकसंज्ञा-धिकारादिति वाच्यम्। 'ध्रुवमपाय' इति योगविभागेन कारक-संज्ञाविधानादपादानमिति सूत्रे ध्रुवमपाय इत्यनुवर्तनात् कार-कं सदपादानसंज्ञं भवतीत्येवमपादानादीनां विधानाच्च। न तु संज्ञाशब्दानां स्वरूपवाच्यत्वमेव युक्तमिति वाच्यम् । महत्याः संज्ञायाः करणादावृत्त्याद्यनुमानात् कारकं क्रियां कुर्वत् का-रकसंज्ञं भवतीत्यर्थलाभात्। शक्तिश्च कारकं, न तु द्रव्यम्। 'क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुरि'त्युक्तत्वात् ॥

नन्वेवं स्वतन्त्रस्यैव क्रियानिष्पत्तौ व्यापारदर्शनात् तस्यैव कारकसंज्ञा स्याद्, न तु कर्मादीनाम्। न च सर्वेषां तद्वत् स्वातन्त्र्यं, कर्तृसंज्ञाया अपि सर्वेषां प्रसङ्गादित्याशङ्क्याह —

**सर्वं तत्स्वातन्त्र्याविवक्षया ॥ ३ ॥**

इति । कर्मादीनामपि कारकत्वमस्त्येव । तेषां कर्मादीनां यत् स्वव्यापारे स्वातन्त्र्यं, तद्विवक्षयेत्यर्थः। 'पूरणगुण–'(२.२.११)इति षष्ठीसमासप्रतिषेधोऽत्र न भवति, 'वर्तमानसामीप्ये–' (३.३.१३१) इति निर्देशेन तस्यानित्यत्वज्ञापनात् । अन्ये त्वाहुः—लोकप्रसिद्धाः शुक्लादयो गुणशब्देन तत्र गृह्यन्ते, न तु संसर्गादिलक्षणलक्षिता इति । अयमाशयः—यद्यपि विक्लेदनादिप्रधानक्रियानिष्पादने कर्मादीनां स्वातन्त्र्यं नास्ति, तथापि विक्लित्तिज्वलनधारणावधिभावोपनिगमानुमत्यादिलक्षणेषु स्वव्यापारेषु स्वातन्त्र्यात् तदाश्रयेण कारकसंज्ञा तेषां प्रवर्तत एव । स्वव्यापारे स्वातन्त्र्यमनुभवतामेव प्रधानक्रियायामुपयोगात् कर्तृसन्निधावपि स्वव्यापारस्यानिवर्तनादविरोधः स्वातन्त्र्यपारतन्त्र्ययोः । अत एव करणं कारकमित्यादिसामानाधिकरण्योपपत्तिः । कर्तृसंज्ञा तु कारकाधिकारादेव स्वातन्त्र्ये लब्धे पुनः स्वतन्त्रश्रुतेर्नियमार्थत्वात् स्वातन्त्र्यमेव यस्य, तस्य विधानात् पारतन्त्र्योच्छुरितानां कर्मादीनां न भवतीति न (कदा ? का) चिदनुपपत्तिः ॥ ३ ॥

एवं कारकसंज्ञां प्रतिपाद्य संज्ञावाक्यानां विधिवाक्यशेषभूतत्वात् तत्र विहितां सुब्विभक्तिं नियमोक्तिमुखेन दर्शयति —

**तत्र कर्तर्यभिहिते प्रथमैव विधीयते ।**

इति । तिङ्कृत्तद्धितसमासैरनभिहिते कर्तरि प्रातिपदिकमात्रस्यावशिष्टत्वात् तत्र विहिता प्रथमैव भवति, नान्या

विभक्तिः। तत्र तिङाभिहिते देवदत्तः पचतीत्याद्युदाहरणम्। छन्दोध्यायी देवदत्त इति कृता। श्राद्धी श्राद्धिको ब्राह्मण इति तद्धितेन। ऊढरथोऽनड्वानिति समासेन॥

तृतीया वाथ षष्ठी वा स्मृतानभिहिते द्विधा॥ ४॥

इति। वाशब्दः समुच्चये। अथ शब्दः पादपूरणार्थः, मङ्गलार्थो वा। 'मङ्गलमध्यानि शास्त्राणि प्रथन्ते' इति हि भाष्यकारः प्राह। यथा 'भूवादयो धातवः' (१. ३. १) इत्यत्र वकारः। अत्र विभक्तिः सामान्यं, तस्य द्वित्वसङ्ख्या भेदिका, इति सामान्यभेदकधर्मलक्षणविधार्थविहितधाप्रत्ययोपपत्तिः। एवं सर्वत्र। अनभिहिते कर्तरि द्विप्रकारा विभक्तिः तृतीया षष्ठी च। तृतीया 'ओदनः पच्यते देवदत्तेन'। षष्ठी 'भवतः शायिका, भवत आसिका'। 'कर्तृकर्मणोः कृति' (२.३.६५) इति कर्तरि षष्ठी। राज्ञां मतः, राज्ञां बुद्धः। 'क्तस्य च वर्तमाने' (२. ३. ६७) इति षष्ठी। 'न लोका—' (२. ३. ६९) इति प्रतिषेधे प्राप्ते वचनम्। भवतः कटः कर्तव्यः। 'कृत्यानां कर्तरि वा' (२. ३. ७१) इति षष्ठी॥ ४॥

तथा कर्मण्यभिहिते विभक्तिं विद्धि पूर्विकाम्।

इति। तथेति कर्तृवदित्यर्थः। पूर्वैव पूर्विका। यावादित्वात् कन्। प्रथमामित्यर्थः। ओदनः पच्यते देवदत्तेनेत्याद्युदाहरणम्।

अनुक्ते प्रथमां हित्वा पञ्चमीं सप्तमीं तथा॥ ५॥

इति। अनुक्ते कर्मण्येता विभक्तीर्हित्वा वर्जयित्वा परिशिष्टा द्वितीयादयो भवन्ति। द्वितीया 'ग्रामं गच्छति, ओदनं पचति'। तृतीया 'पित्रा सञ्जानीते, मात्रा सञ्जानीते'। 'संज्ञोऽन्यतरस्यां कर्मणि' (२. ३. २२) इति तृतीया। चतुर्थी 'ग्रामाय गच्छति, ग्रामाय व्रजाति'। 'गत्यर्थकर्मणि—'(२.३.१२)इत्यादिना चतुर्थी। एधेभ्यो व्रजति, फलेभ्यो व्रजति। 'क्रियार्थोपपदस्य कर्मणि स्थानिनः'(२.३.१४) इति चतुर्थी। न त्वा तृणाय मन्ये, न त्वा बुसाय मन्ये। 'मन्यकर्मण्यनादरे विभाषाप्राणिषु' (२. ३. १७) इति चतुर्थी। षष्ठी अपां स्रष्टा, पुरां भेत्ता। 'कर्तृकर्मणोः कृति' (२. ३. ६५) इति षष्ठी। 'अधीगर्थदयेशां कर्मणि'(२. ३. ५२) इत्यादिभिर्विहिता षष्ठी नात्रोदाहरणम्। तत्र 'शेष'इत्यधिकारात् कर्मणि शेषत्वेन विवक्षिते षष्ठीविधानात्। 'कर्तृकर्मणोः कृति' इत्यत्र तु पुनः कर्मग्रहणाद् न शेषाधिकारः। तथा च धर्मानुस्मरणमित्यादौ समासो भवति। अन्यथा 'शेष' इत्येव सिद्धायां षष्ठ्यां पुनर्विधानान्नियमार्थाद् यथा मातुः स्मृतमित्यादौ समासो न भवति, (य? त)थात्रापि न स्यात्। सूत्रप्राप्त्यपेक्षयैतदुक्तं, न तूपसङ्ख्यानमप्यपेक्ष्य। तेनाधीती व्याकरण इत्यादौ 'क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम्' (वा.२.३.३६) इति कर्मणि सप्तमी भवति॥ ५॥

तृतीया पञ्चमी चैव षष्ठी च करणे त्रिधा।

इति। अनुक्त इत्यनुषङ्गः। उक्ते तु मांसपचनो वह्निरित्यादौ पूर्ववत् प्रथमा द्रष्टव्या। एवं सम्प्रदानापादानाधिकर-

णेषु गोघ्नोऽतिथिः प्रस्कन्दनः स्तम्बः निशानिशाणे (?) त्यादौ प्रथमा द्रष्टव्येति भावः। तृतीया 'दात्रेण लुनाति, परशुना छिनत्ति'। पञ्चमी 'स्तोकान्मुक्तः, अल्पान्मुक्तः'। 'करणे च स्तोका–'(२.३.३३) इत्यादिना पञ्चमी। षष्ठी 'सर्पिषो जानीते, मधुनो जानीते'। 'ज्ञोऽविदर्थस्य करणे' (२. ३. ५१)इति षष्ठी। घृतस्य यजते, सोमस्य यजते। 'यजेश्च करणे' (२.३.६३) इति षष्ठी। यद्यपि 'ज्ञोऽविदर्थस्य करण' इत्यादौ शेषाधिकारात् कर्मादिव्यतिरिक्तस्य च शेषत्वान्न करणे षष्ठीति सिद्धान्तः, तथापि प्रयोगबाहुल्यप्रतिपादनाय भूतपूर्वं करणत्वमाश्रित्य 'षष्ठी च करणे त्रिधे' त्युक्तमिति केचित्। अन्ये तु 'तृतीया पञ्चमी चैव करणे कारके द्विधे'ति पठन्ति॥

**षष्ठी चतुर्थी तृतीया संप्रदाने त्रिधा मता॥ ६॥**

इति। षष्ठी 'पुरुषमृगश्चन्द्रमसो दातव्यः'। 'चतुर्थ्यर्थे बहुलं छन्दसि' (२. ३. ६२) इति षष्ठी। अत्रापि पूर्ववत् षष्ठीप्रदर्शनोपपत्तिः। 'चतुर्थी च तृतीया च सम्प्रदाने द्विधा मते'ति वा पाठः। चतुर्थी 'उपाध्यायाय गां ददाति'। 'चतुर्थी सम्प्रदाने'(२.३.१३) इति चतुर्थी। तृतीया 'दास्या मालां सम्प्रयच्छते, वृषल्या सम्प्रयच्छते'। दास्यै मालां ददातीत्यर्थः। 'दाणश्च सा चेच्चतुर्थ्यर्थे(१.३.५५) इत्यात्मनेपदम्। अशिष्टव्यवहारे तृतीयाया वक्तव्यत्वाच्चेच्छब्दस्य चार्थवृत्तित्वाद्वा तृतीया॥ ६॥

**पञ्चमी खल्वपादाने वर्तते न ततोऽन्यतः।**

इति। खल्वित्यवधारणे। अन्यत इति आद्यादित्वात् प्रथ-

मार्थे तसिः । अपादाने कारके पञ्चम्येव । ततः पञ्चम्या अन्या विभक्तिर्नास्ति । वृक्षात् पर्णं पततीत्याद्युदाहरणम् ॥

सप्तम्येवाधिकरणे

इति। स्थाल्यां पचतीत्याद्युदाहरणम् । ननु च 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे'(२. ३. ६४) इति द्विरह्नो भुङ्क्त इत्यादावधिकरणे षष्ठ्यपि भवति । नैषाधिकरणे,शेषाधिकारादित्यदोषः । एवमपि पुष्येण पायसमश्नीयादित्यादौ 'नक्षत्रे च लुपि'(२.३.४५) इत्यधिकरणे तृतीयापि भवति । सा किं न दर्शिता । एवं तर्हि एवकारो भिन्नक्रमः। अधिकरण एव सप्तमी, न कारकान्तर इति सप्तमी नियम्यते। कथं तर्हि अधीती व्याकरण इत्यादौ 'क्तस्येन्विषयस्य—'(वा० २. ३. ३६) इति कर्मणि सप्तमी । उपसङ्ख्यानानपेक्षया चैतदुक्तमित्यदोषः । अन्ये त्वस्य व्याख्यान(स्य स ? स्यासा)मञ्जस्यं मन्यमानाः पाठान्तरं वर्णयन्ति — "पञ्चमी खल्वपादाने तथाधिकरणे द्विधा । तृतीया सप्तमी चैव" इति ॥

प्रकृतमुपसंहरति —

कारकस्यैष सङ्ग्रहः ॥ ७ ॥

इति । अत्र यदि सामान्येन येनकेनाप्यभिहितेऽनभिहिते च कर्मादिकारके विभक्तयो भवन्तीत्युच्यते, तदा कटं करोति भीष्ममुदारं शोभनं दर्शनीयमित्यादौ ईप्सिततमविशेषणवि-

शिष्टकटवस्तुगतकर्मणः साकल्येन तस्मादुत्पद्यमानया द्वितीययाभिहितत्वाद् भीष्मादिभ्यो द्वितीया न स्यात् । यथा कृतः कटः शोभनो दर्शनीय इत्यादौ करोतेरुत्पद्यमानेन क्तप्रत्ययेन सर्वस्य कर्मणोऽभिहितत्वादन्येभ्यो द्वितीया न भवति । तस्माद्विशेषविषयमभिहितानभिहितत्वमत्राभिमतम् ॥ ७ ॥

के पुनस्तद्विशेषा इत्यत्राह —

**समासस्तद्धितस्तिङ्कृच्चत्वारस्तेऽभिधायकाः ।**
**त एवानभिसम्बन्धाद् भवन्त्यनभिधायकाः ॥ ८ ॥**

इति । अनभिसम्बन्धादिति समासादीनां कर्मादिनाभिधेयेनाभिधायकत्वेन सम्बन्धाभावादित्यर्थः । न्यायसिद्धं चैतत्, न तु वचनलभ्यम् । तथाहि—इह यस्माद् या विभक्तिरुत्पद्यते, तया तद्वाच्यगतकर्मादि वक्तुं द्योतयितुं वा शक्यते, नान्यवाच्यगतमपि । कटशब्दश्च कटत्वजातियुक्तमर्थमाह , नतु भीष्माद्याकारविशिष्टम् । ततश्च यथा तद्विशिष्टप्रतिपादनाय तत्प्रयोगो भवति, एवं तद्गतकर्मादिप्रतिपादनाय तेभ्योऽपि द्वितीयादयो भवन्त्येव । क्तप्रत्ययस्तु प्रकृत्यर्थस्य क्रियारूपस्य कर्मत्वाभावात् तं प्रति यस्य कर्मभावः, तमभिधत्त इति युक्तं भीष्माद्याकारविशिष्टकटकर्माभिधानं तस्य ॥ ८ ॥

अभिधायकोक्तिप्रसङ्गायातसमासस्वरूपमाह —

**षोढा समासः संक्षेपाद्**

इति । अव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिकर्मधारय-

भेदेन षट्प्रकारः समासः । संक्षेपात् संकोचाद्, अवान्तरभेदाविवक्षयेत्यर्थः । तत्र द्विगुकर्मधारययोस्तत्पुरुषेऽन्तर्भावाद् गोबलीवर्दन्यायेन भेदः ॥

अष्टाविंशतिधा पुनः ।

इति । अवान्तरभेदविवक्षायां त्वष्टाविंशतिप्रकार इत्यर्थः ॥

नित्यानित्यत्वयोगेन लुगलुक्त्वेन च द्विधा ॥ ९ ॥

इति । यदि नित्यत्वमनित्यत्वं च भेदकधर्म आश्रीयते, तदा द्वैविध्यम् । तत्र नित्यसमासः कारणभेदात् त्रिधा भवति । कश्चिद्विभाषाधिकारात् प्राग् विधानात् । यथा—अधिस्त्रीत्यादिः । कश्चिन्नित्याधिकारविहितत्वात् । यथा—उद्दालपुष्पभञ्जिकादिः 'नित्यं क्रीडाजीविकयोः'(२.२.१७)इत्यादिना विहितः । कश्चित् सामर्थ्यात् । यथा — सुराजा, अतिराजा, ब्राह्मणार्थः सूप इत्यादिः । अत्र स्वादीनां विग्रहवाक्यस्थानां शोभनाद्यर्थप्रतिपादनसामर्थ्याभावादन्येन विग्रहप्रदर्शनात् सामर्थ्याद् वाक्याभावलक्षणं नित्यत्वम् । अनित्यसमासो विभाषाधिकारविहितापत्रिगर्तादिः । एवं लुगलुक्त्वाभ्यामपि द्वैविध्यम् । लुग् 'राजपुरुषः, ब्राह्मणकम्बलः' । अलुग् 'दूरान्मुक्तः, अल्पान्मुक्तः' । 'स्तोकान्तिक—'(२.१.३९) इति समासः । 'पञ्चम्याः स्तोकादिभ्यः' (६.३.२)इत्यलुक् । एवमानङ्वधिकालुक्प्रकरणस्थौजःसहोम्भस्तमसःप्रभृतिसूत्रविहितौजसाकृतादयो द्रष्टव्याः ॥ ९ ॥

अष्टाविंशतिधेत्युक्तं विवृणोति —

**तत्राष्टधा तत्पुषः**

इति । सप्तविभक्त्यन्तनञ्तत्पुरुषभेदेनाष्टप्रकारस्तत्पुरुषः। तत्र प्रथमातत्पुरुषः—पूर्वं कायस्य पूर्वकायः, अपरकायः । 'पूर्वापराधर–'(२.२.१)इत्यादिना समासः। अर्धं पिप्पल्याः अर्धपिप्पली । 'अर्धं नपुंसकम्'(२.२.२)इति समासः। द्वितीयं भिक्षायाः द्वितीयभिक्षा, तृतीयभिक्षा। 'द्वितीयतृतीय–'(२.२.३) इत्यादिना समासः । प्राप्तो जीविकां प्राप्तजीविकः, आपन्नजीविकः । 'प्राप्तापन्ने च द्वितीयया'(२.३.४)इति समासः । मासो जातस्य स मासजातः, संवत्सरजातः । 'कालाः परिमाणिना' (२.२.५) इति समासः। द्वितीयातत्पुरुषः—कष्टं श्रितः कष्टश्रितः, कान्ताराश्रितः। 'द्वितीया श्रिता—'(२.१.२४)इत्यादिना समासः। खट्वारूढो जाल्मः । 'खट्वा क्षेपे'(२.१.२६) इति समासः। अहरतिसृता मुहूर्ताः, रात्र्यतिसृता मुहूर्ताः । 'कालाः' (२.१.२८) इति समासः । मुहूर्तसुखं, सर्वरात्रकल्याणी । 'अत्यन्तसंयोगे च' (२.१.२९)इति समासः। तृतीयातत्पुरुषः— शङ्कुलया खण्डः शङ्कुलाखण्डः। 'तृतीया तत्कृता—' (२.१.३०) इति समासः । मासेन पूर्वः मासपूर्वः, पितृसदृशः । 'पूर्वसदृश—' (२.१.३१) इत्यादिना समासः। अहिना हतः अहिहतः, नखैर्भिन्नः नखभिन्नः। 'कर्तृकरणे कृता बहुलम्'(२.१.३२) इति समासः । दध्युपसिक्त ओदनो दध्योदनः । 'अन्नेन व्यञ्जनम्'(२.२.३४)इति समासः। गुडेन मिश्रा धानाः गुडधानाः। 'भक्ष्येण मिश्रीकरणम्'(२.१.३५)

इति समासः । चतुर्थीसमासः — यूपदारु, कुण्डलहिरण्यं, ब्राह्मणसूपः, कुमारबलिः। 'चतुर्थी तदर्था–'(२.१.३६)इति समासः। पञ्चमीसमासः — वृकभयं, दस्युभयम् । 'पञ्चमी भयेन'(२.१.३७)इति समासः। सुखापे ाः, कल्पनापोढः। 'अपेतापोढ–'(२.१.३८)इति समासः । षष्ठीसमासः — राजपुरुषः, ब्राह्मणकम्बलः। 'षष्ठी'(२.२.८) इति समासः । ब्राह्मणयाजकः, क्षत्रिययाजकः । 'कर्तरि च'(२.२.१६)इति प्रतिषेधे प्राप्ते 'याजकादिभिश्च'(२.२.९) इति समासः । सप्तमीसमासः — अक्षशौण्डः, अक्षधूर्तः। 'सप्तमी शौण्डैः'(२.१.४०)इति समासः। सांकाश्यासिद्धः, आतपशुष्कः। 'सिद्धशुष्कपक्वबन्धैश्च' (२.१.४१) इति समासः । तीर्थध्वाङ्क्षः, तीर्थकाकः।'ध्वाङ्क्षेण क्षेपे'(२.१.४२) इति समासः । मासदेयं, संवत्सरदेयम् । 'कृत्यैर्ऋणे'(२.१.४३) इति समासः । अरण्येतिलकाः, अरण्येमाषकाः । 'संज्ञायाम्'(२.१.४४) इति समासः । 'हलदन्तात् सप्तम्याः–'(६.३.९)इत्यलुक्। पूर्वाह्णकृतम्, अपराह्णकृतम्। 'क्तेनाहोरात्रावयवाः'(२.१.४५) इति समासः। तत्रकृतं, तत्रभुक्तम्। 'तत्र'(२.१.४६)इति समासः। अवतप्तेनकुलस्थितम्, उदकेविशीर्णम् । 'क्षेपे'(२.१.४७) इति समासः । पात्रेसमिताः, उदुम्बरमशकाः । 'पात्रेसमितादयश्च' (२.१.४८)इति समासः। नञ्समासः — अब्राह्मणः, अवृषलः । 'नञ्' (२. २. ६) इति समासः ॥

### षड्विधः कर्मधारयः ।

इति । सामान्यविशेषकुत्सितपूर्वपदोपमानपूर्वपदोपमितपूर्वपदवर्णोभयभेदेन षड्विधत्वम् । तत्र सामान्यशब्देन

'विशेषणं विशेष्येण—' (२. १. ५७) इति सामान्येन विहितः समास उच्यते । विशेषशब्देनापि तत्प्रपञ्चार्थं ये विहिताः 'पूर्वापरप्रथम—' (२. १. ५८) इत्यादिभिः सूत्रैः, ये च 'पूर्वकाल—' (२. १. ४९) इत्यादिभिः पूर्वादिपूर्वनिपाताद्यर्थं, तेषामुभयेषां ग्रहणम् । यद्यपि कुत्सितपूर्वपदादीनामपि विशेषेऽन्तर्भावः, तथापि प्रसिद्धत्वप्रतिपादनार्थं प्रपञ्चार्थं च भेदेनोपादानं कृतम् । सामान्ये 'नीलोत्पलं, रक्तोत्पलम्'। नीलं च तदुत्पलं चेति विगृह्य भेदकलक्षणविशेषणवाचिसुबन्तस्य भेद्यलक्षणविशेष्यवाचिना सह 'विशेषणं विशेष्येण बहुलम्' इति समासः । विशेषे 'स्नातानुलिप्तः, दग्धप्ररूढः' । 'पूर्वकालैक—' इत्यादिना समासः । पूर्वेषुकामशमी, अपरेषुकामशमी। 'दिक्सङ्ख्ये संज्ञायाम्' (२. १. ५०) इति समासः । संज्ञायां नियमार्थोऽयम् । पूर्वपुरुषः, अपरपुरुषः । 'पूर्वापर—' इत्यादिना समासः। एवमापादपरिसमाप्तेर्यानि सूत्राणि वर्णसूत्रवर्जितानि, तेषामुदाहरणान्यूह्यानि । कुत्सितपूर्वपदे 'वैयाकरणखसूचिः, याज्ञिककितवः' । यः पृष्टो निष्प्रतिभत्वाद् अहो विमलं गगनमिति प्रश्नं विस्मार(यितुं ? यति), स एवमुच्यते—खसूचिश्चासौ वैयाकरणश्चेति । तेन वैयाकरणत्वकुत्सनेन पूर्वपदस्य कुत्सितत्वात् 'कुत्सितानि कुत्सनैः' (२. १. ५३) इति विशेष्यपूर्वपदार्थः समासो भवति । एवं याज्ञिककितव इत्ययाज्ययाजनतत्पर उच्यते । उपमानपूर्वपदे 'शस्त्रीश्यामा, कुमुदश्येनी' । शस्त्रीव श्यामेति विगृह्य 'उपमानानि सामान्यवचनैः'(२. १. ५५)इति समासः । अत्र शस्त्र्यादेः सामानाधिकर(ण ? ण्य)प्रसिद्ध्यर्थमुपमेयवृत्तित्वमभेदेनोपचाराद्ङ्गीक्रियते । पू-

र्णावस्थाश्रयेण चोपमानानीत्युच्यते । एवञ्च गौणत्वाद् 'विशे-
षणं विशेष्येण बहुलम्'(२.१.५७) इति समासो न प्राप्नोतीत्यय-
मारम्भः। उपमेयपूर्वपदे 'पुरुषव्याघ्रः, पुरुषसिंहः' । पुरुषोऽयं
व्याघ्र इवेति विगृह्य 'उपमितं व्याघ्रादिभिः—' (२. १. ५६)
इति समासः । एतद्वचने न केवलं गौणत्वमेव हेतुः, किन्तु
विशेष्यपूर्वपदनिपातप्रापणापि। वर्णोभयपदे 'कृष्णशबलः, लोहि-
तशबलः' । सामानाधिकरण्योपपत्तयेऽवयवद्वारेण समुदायाभि-
धानाद् गौणत्वादयमारम्भः ॥

षड्विधश्च बहुव्रीहिः

इति । तत्र 'अनेकमन्यपदार्थे' (२.२.२४) इति विहितो
द्विविधः द्विपदो बहुपदश्चेति । चित्रगुः, शबलगुः, सुसू-
क्ष्मजटकेशेन, सुनताजिनवाससा, इत्युदाहरणम् । केचित् तु
तद्गुणसंविज्ञानातद्गुणसंविज्ञानभेदेन द्वैविध्यमाहुः । तस्या-
न्यपदार्थस्य सम्बन्धी गुण उपसर्जनीभूतो वर्तिपदार्थो
व्यवहारे संविज्ञायते यस्मिन् बहुव्रीहौ, स तद्गुणसंविज्ञानः ।
तस्मादन्योऽतद्गुणसंविज्ञानः । पूर्वस्योदाहरणं 'दीर्घविषाणमा-
नयेति । अत्र यद्यप्यन्यपदार्थस्यैव शब्दवाच्यत्वं, तथापि
समवायस्य प्रवृत्तिनिमित्तत्वाद् अपृथक्सिद्धयोरेव च तद्भा-
वात् सामर्थ्यादग्न्यानयने पात्रानयनवद् वर्तिपदार्थस्यापि
कार्ययोगो भवति । तथा शुक्लवाससमानयेत्याद्यप्युदाहरणं,
यत्र संयोगः प्रवृत्तिनिमित्तम् । विशेषणत्वविवक्षायां चे-
दमुदाहरणम् । यदा तु काकनिलयनादिवदुपलक्षणत्वेन

विवक्ष्यते यः शुक्लवासा दृष्टः स आनीयतामिति, तदेतन्नोदाहरणम्। अपरस्य 'चित्रगुः, शबलगुरि'त्याद्युदाहरणम्। अत्र हि स्वस्वामिसम्बन्धस्य प्रवृत्तिनिमित्तत्वाद् देशान्तरगतयोरपि स्वस्वामिभावस्याविहतत्वात् पुरुषस्यैव कार्ययोगः, न तु गवाम्। सूत्रान्तरविहितश्चतुर्विधः—सङ्ख्योत्तरपदोऽन्तरालाभिधेयकः सरूपोपलक्षितः सहपूर्वपदश्चेति। सङ्ख्योत्तरपदस्तावद् 'उपदशाः, उपविंशाः, द्वित्राः, द्विदशाः'। 'सङ्ख्ययाव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये'(२.२.२५) इति समासः। 'बहुव्रीहौ सङ्ख्येये डज्' (५.४.७३)इति डच् समासान्तः। अन्तरालाभिधेये 'दक्षिणपूर्वा दिक्, पूर्वोत्तरा'। दक्षिणस्याश्च पूर्वस्याश्च दिशोऽन्तरालमिति विगृह्य 'दिङ्नामान्यन्तराले' (२.२. २६) इति समासः। सरूपोपलक्षिते 'केशाकेशि, दण्डादण्डि'। केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तं, दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तमिति विगृह्य 'तत्र तेनेदमिति सरूपे' (२. २. २७) इति समासः। 'इच् कर्मव्यतिहारे' (५. ४. १२७) इति समासान्तः। 'अन्येषामपि दृश्यते'(६. ३.१३७) इति पूर्वपदस्य दीर्घः। तिष्ठद्गुप्रभृतिषु 'इच् कर्मव्यतिहारे' इति पाठादव्ययत्वात् सुब्लुक्। इतिकरणाद् विवक्षार्थाद् युद्धक्रियायामेव समासः। सहपूर्वपदे 'सपुत्रः, सच्छात्रः'। सह पुत्रेणागत इति विगृह्य 'तेन सहेति तुल्ययोगे'(२. २. २८)इति समासः। 'वोपसर्जनस्य' (६. ३. ८२) इति सभावः॥

द्विगुराभाषितो द्विधा ॥ १० ॥

इति। एकवदनेकवद्भेदेन। एकवद्भावे तावत् 'पञ्च पू-

